॥ सीतारामस्तोत्र ॥

अयोध्यापुर-नेतारं मिथिलापुर-नायिकाम् ।
राघवाणामलङ्कारं वैदेहानामलङ्क्रियाम् ॥ १॥

रघूणां कुलदीपं च निमीनां कुलदीपिकाम् ।
सूर्यवंश-समुद्भूतं सोमवंश-समुद्भवाम् ॥ २॥

पुत्रं दशरथस्याद्यं पुत्रीं जनकभूपतेः ।
वशिष्ठानुमताचारं शतानन्दमतानुगाम् ॥ ३॥

कौसल्यागर्भ-सम्भूतं वेदिगर्भोदितां स्वयम् ।
पुण्डरीक-विशालाक्षं स्फुरदिन्दीवरेक्षणाम् ॥ ४॥

चन्द्रकान्ताननाम्भोजं चन्द्रबिम्बोपमाननाम् ।
मत्त-मातङ्ग-गमनं मत्त-हंस-वधू-गताम् ॥ ५॥

चन्दनार्द्र-भुजामध्यं कुङ्कुमार्द्र-कुचस्थलीम् ।
चापालङ्कृत-हस्ताब्जं पद्मालङ्कृत-पाणिकाम् ॥ ६॥

शरणागत-गोप्तारं प्रणिपाद-प्रसादिकाम् ।
कालमेघनिभं रामं कार्तस्वर-सम-प्रभाम् ॥ ७॥

दिव्य-सिंहासनासीनं दिव्य-स्रग्वस्त्र-भूषणाम् ।
अनुक्षणं कटाक्षाभ्यां अन्योन्येक्षण-काङ्क्षिणौ ॥ ८॥

अन्योन्य-सदृशाकारौ त्रैलोक्यगृहदम्पती।
इमौ युवां प्रणम्याहं भजाम्यद्य कृतार्थताम् ॥ ९॥

अनेन स्तौति यः स्तुत्यं रामं सीतां च भक्तितः ।
तस्य तौ तनुतां पुण्यास्सम्पदः सकलार्थदाः ॥ १०॥

एवं श्रीरामचन्द्रस्य जानक्याश्च विशेषतः ।
कृतं हनूमता पुण्यं स्तोत्रं सद्यो विमुक्तिदम् ।
यः पठेत्प्रातरुत्थाय सर्वान् कामानवाप्नुयात् ॥ ११॥

॥ इति हनूमत्कृत-सीताराम स्तोत्रं सम्पूर्णम् ॥